प्रवेशो मुखद्वारा, तेन भोजनादावशुद्धिराचमनेनोपोह्यते, तत्र शुद्ध्यर्थाचमननिमित्तानि क्षीयविण्मूत्ररेतसामुत्सर्गस्पर्शनञ्च । अशौचजलतदार्द्रभूस्पर्शनं, चतुर्विधामेध्यस्पर्शनम् ।[1] निर्लोमोष्ठादिदेशस्पर्शनम्, उच्छिष्टब्राह्मणस्पर्शनम्, बुद्धिपूर्व्वकातिक्षुद्रनिःस्नेहमानुषास्थिस्पर्शनम् ।

चाण्डालादिस्पृष्टस्याबुद्धिपूर्व्वकस्पर्शनम्, अमेध्यलिप्तप्रदेशस्य त्रिःप्रक्षालनपूर्व्वकम्, आचमननिमित्तम्, अस्थिसञ्चयनोर्द्ध्वं रोदनम्, जलाशयप्रवेशोत्तरणे भुक्तमात्रवमनम्, चण्डालोदक्यासूतकीपतितशवतत्स्पृष्टदर्शनम्, रथ्याकर्दमस्पर्शनम्, परकीयद्वादशविधमलस्पर्शनम्, भासकाकवलाकावानरमार्जारखरोष्ट्रश्वसूकरकुक्कुटवराहचेलनिर्णेजकरजकचर्म्मकृत्व्याधकैवर्त्ततैलकृत्सुराविक्रयिनटनपुंसकवेश्यानां स्पर्शनम् ।

नाभेरूर्द्ध्वं करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति, इति, वचनादुत्तमाङ्गे स्नानमधिकम् ।

एवं च, एभिर्यदङ्गसंस्पृष्टं शिरोवर्जं द्विजातिषु ।
इत्यत्र शिरःपदं नाभ्यूर्द्ध्वभागपरमेव । तथाचमनं कृतं न वेति सन्देहः, आचमननिमित्तं न वेति सन्देहश्च, एतानि शुद्ध्यर्थाचमननिमित्तानि ।

(१) क्षुतं, श्लेष्मत्यागः, भोजनपाने, चण्डालादिभाषणमिथ्याभाषणपरुषभाषणनिद्रा दन्तधावनवस्त्रपरिवर्त्तनरथ्याक्रमणानि। द्वादशमलानां स्वस्थानात्प्रच्यवनम् । मानुषेतरनिःस्नेहपञ्चनखास्थिस्पर्शनम् । पञ्चनखास्थिस्नेहस्पर्शनम् ।

अथ पुरुषार्थाचमननिमित्तानि, असकृतविकृतश्वासः, ब्राह्मणस्पर्शनम्, अग्निस्पर्शनम्, गोस्पर्शनम्, लोष्टादिरहितस्य हस्तस्य दक्षिणं प्रत्युद्यमः, पादक्षालनं, शिखाबन्धनं, नीविस्रंसनं, वस्त्रपरिधानं, यज्ञोपवीतबहिःकरणं, स्नानं, भोजनारम्भः।

उच्छिष्टदोषरहितताम्बूलादिभक्षणं, शयनारम्भः, श्मशानाक्रमणं, अभ्यङ्गः,

श्मशानाक्रमणं, अभ्यङ्गस्याशुचिकरत्वे मानाभावादेवाचाचमनं पुरुषार्थः। श्मशानाक्रमणं नाशुद्धिकरम्।

महाभारते,—

न च मेध्यतरं किञ्चित् श्मशानादिह विद्यते। इति।

एतेषु निमित्तेष्वाचमनस्योपात्तदुरितक्षयः फलम्। क्रियाङ्गाचमनं सामान्यतः।

क्रियाञ्च कुरुते मोहादनाचम्यैह नास्तिकः। इति, वायुपुराणोक्तं, विशेषतश्च, प्राणसंयमनं कृत्वा आचमेत् प्रयतोऽपि सन्नित्यादौ सन्ध्यान्तर्गतप्राणायामस्य निमित्तत्वम्।

तत्त्वसारसंहितायाम्,—

अर्चयित्वा महेशानमनाचम्य क्रियान्तरम्।
कुर्व्वन् किल्बिषमाप्नोति सत्यमीश्वरभाषितम्॥

तथा,—

आदित्यञ्च गणाध्यक्षं देवपालञ्च पार्व्वतीम्।
आराध्याचमनं कार्य्यं सुधिया कर्म्मसिद्धये॥

लङ्घयित्वा च निर्म्माल्यमेतेषां त्रिदशाधिप ।
सद्य आचमनं कार्य्यं कर्म्मान्तरविशुद्धये ॥
इत्यादौ कर्म्माङ्गाचमनम् ।

तथा,—

श्राद्धे पिण्डदानादौ कर्म्माङ्गमाचमनम् । अतएव पैतृके दक्षिणामुख इति पादप्रक्षालने दिङ्मुखनियम उक्तः । शुद्ध्यर्थाचमनमेव कर्म्माङ्गं न पृथक्कर्म्माङ्गमाचमनम् ।

अथ द्विराचमननिमित्तानि ।

याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचम्य वासोऽन्यत् परिधाय च ॥

आपस्तम्बः । भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत् । द्विः परिमृजेत् । सकृदुपस्पृशेत् । भोजनपूर्व्वाचमने द्विः परिमार्ज्जननियमः । अन्यत्र द्विस्त्रिर्वा । ओष्ठस्पर्शनमात्रं सकृत् । अन्यत्र सकृत्त्रिर्वा । कलिलकासश्वासरथ्याचत्वरश्मशानाक्रान्तिष्वाचान्तः पुनराचामेत्॰। कलिलं कठिनं, श्लेष्मा, श्वासोच्छ्वायामादिकाले विकृतः, चत्वरं भूतादीनां बलिदानस्थानम् ।

शङ्खलिखितौ, मूत्रपुरीषष्ठीवनादिषु शुक्लवाक्याभिधाने पुनरुपस्पृशेत् । शुक्लं परुषं आदिपदं शुक्लोत्सर्गस्याप्युपलक्षणम् । द्विराचमनाधिकारे वशिष्ठः, ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ, स्नानं पानं क्षुतं स्वापः । भोजनान्तः, रथ्योपसर्पणं,

वस्त्रपरिधापनं, भोजनारम्भः, कठिनश्लेष्मत्यागः, कासः, विकृतश्वासः, चत्वराक्रमणं, श्मशानाक्रमणं मूत्रपुरीषोत्सर्गः, ष्ठीवनं, परुषवाक्याभिधानं, शुक्रोत्सर्गः, इत्यष्टादशद्विराचमननिमित्तानि। शुद्ध्यर्थे नैमित्तिके च यथासम्भवं, द्विराचमनेऽपि सकृदेवेन्द्रियस्पर्शनं कार्य्यं न द्विः। द्विराचमनेऽपि सर्व्वोपितत्वादिविचारः पूर्व्ववत्।

अथाचमनानुकल्पः, आपस्तम्बः, सुप्ते[1] 'सर्व्वथो सिंहाणिकास्रावालम्भे लोहितस्य केशानां अग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वाऽमेध्यं चोपस्पृश्याप्रयतमानुषम्। नीवीं च परिधाय अप उपस्पृशेत्।

आर्द्रं वा सकृतोषधिं भूमिं वा उक्तनिमित्तेष्वाचमनासम्भवे आर्द्रगोमयस्पर्शनम्। तदभावे आर्द्रतृणस्पर्शनम्। तदसम्भवे भूस्पर्शनम्।

पराशरः,—

क्षुते निष्ठीवने चैव दन्तश्लिष्टे तथा नृते।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥
प्रभासादीनि तीर्थानि गङ्गाद्याःसरितस्तथा।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत्॥
आदित्योवरुणः सोमोवायुरग्निस्तथैव च।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः॥

तद्वाक्यशेषात् सर्व्वत्राचमननिमित्ते दक्षिणकर्णस्पर्शनमनुकल्पः।

---

(१) स्वपथो।

एषु च निमित्तेषु अवश्यमनुकल्प इति वाक्यान्तरेण च आचमनस्यैव विधानात्। दन्तश्लिष्टे चाचमनविध्यभावात् कर्णस्पर्शनं मुख्यम्।

मार्कण्डेयपुराणे,—

क्षुत्वा निष्ठीव्य वासश्च परिधायाचमेत् बुधः।
कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्॥
कुर्व्वीतालम्भनं वापि दक्षिणश्रवणस्य तु।
अविद्यमाने पूर्व्वोक्ते उत्तरप्राप्तिरिष्यते॥

क्षुत्निष्ठीवनवस्त्रपरिधानेषु प्रथमकल्प आचमनं, तदसम्भवे गोपृष्ठस्पर्शनम्। तस्याप्यसम्भवे सूर्य्यदर्शनम्। तदसम्भवेऽपि दक्षिणकर्णस्पर्शनम्।

क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने।
कर्म्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्॥

इति रत्नाकरलिखितवाक्यात् कर्म्ममध्ये एषु कर्णस्पर्शनं मुख्यः कल्पः।

स्मृत्यन्तरे,—

गङ्गा वै दक्षिणे कर्णे नासिकायां हुताशनः।
उभावपि च स्प्रष्टव्यौ तत्क्षणादेव शुद्ध्यति॥

एतदुक्तनिमित्तादन्यत्राचमनानुकल्परूपम्।

अथाचमनापवादः।

अत्राङ्गिरसौ, मधुपर्के च सोमे च अप्सु प्राणाहुतिषु च।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्व्वचनं तथा॥

अन्नादिष्विति प्राणाहुतिसाहचर्य्यादापोशानपरमिति लक्ष्मीधरः। तदन्यजलपाने त्वाचमनम्।

शातातपः,--

दन्तलग्ने फले मूले भक्ष्यस्नेहे तथैव च।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः॥

फले मुखशुद्ध्यर्थे कटुतिक्तकषायादौ, अत्र शुद्ध्यर्थमाचमनं नास्ति। नैमित्तिकं स्यादेव। अतएव भट्टाः, परस्पृष्टताम्बूलभक्षणं तदवसाने नाचमनं च दुराचार इत्याहुः।[1]

गौतमः, दन्तश्लिष्टे दन्तधावनादन्यत्र जिह्वाभिमर्शनात् प्राक् च्युतेरित्येके। च्युतेरास्रावावत् निगिरन्नेव तच्छुचिः। अन्यत्र जिह्वामर्शनात् यावज्जिह्वया दन्तेभ्यो तत्भेदो नोपलभ्यते इत्यर्थः। सत्यजिह्वाभिमर्शे यावन्न च्यवते तावच्छुचिरित्येके मन्यन्ते। च्युतेरास्रावावत् लालावत् निगिरन्नेव तच्छुचिः।[2]

आचान्तस्य यदवशिष्यते मुखे दन्तलग्नातिरिक्तमपि तदपि निगिरन्नेव शुचिरित्यर्थः।

पैठीनसिः, भूमिगता विन्दवः परामृष्टाः पूताः, विप्रुषः शुद्धाः, द्विरोमक्षिप्तेष्वाचामेत्। विन्दवः आचमनविन्दवः, परामृष्टाः

---

(१) तदवसानानाचमनम्।

(२) देवलः—भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्। दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत्।

वशिष्ठः,—न श्मश्रुगतोलेपः अशुचिरित्यर्थः। यच्चास्यन्तर्मुखे आचान्तस्यावशिष्टं निगिरन्नेव तच्छुचिः।

स्पृष्टाः, पूताः न प्रत्ययहेतवः, अङ्गपतिता अपि रोमद्वयार्द्रभाव-मापादयितुं समर्था एवाचमननिमित्तं भवति ।

याज्ञवल्क्यः,—

मुखजा विप्रुषोमेध्यास्तथाचमनविन्दवः ।
श्मश्रु चास्यगतं दन्तश्लिष्टं त्यक्त्वा ततः शुचिः ॥

मुखविप्रुषः श्लेष्मविन्दवः, श्मश्रु चास्यप्रविष्टमुच्छिष्टं न करोति, दन्तसक्तं चान्नादिकं स्वयमेव च्युतं त्यक्त्वा शुचिर्भवति, अच्युतं तद्दन्तसमं तथाच पूर्व्वोक्तनिगिरणमनेन विकल्प्यत इति विज्ञानेश्वरः ।

मनुः,—

स्पृशन्ति विन्दवः पादौ य आचामयतः परान् ।
भूमिगास्ते समा ज्ञेया न तैरप्रयतोभवेत् ॥

अन्याचमनार्थं जलं ददतोयेऽम्बुविन्दवः पादौ स्पृशन्ति ते शुद्ध-भूगतेनाम्बुना तुल्या इति कुल्लुकभट्टः । विस्तरस्तु अस्मत्कृते शुद्धिसारे च द्रष्टव्यः ।

वृहस्पतिः,—

प्रचरन्नन्नपानेषु यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय तद्द्रव्यमाचान्तः प्रचरेत्पुनः ॥
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रपुरीषे तु द्रव्यहस्तो न दूष्यति ॥
शौचं तु प्रथमं कुर्य्यात् पादौ प्रक्षालयेत्ततः ।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात् ॥

मनुः,— उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥

एतदन्नव्यञ्जनादिव्यतिरिक्तद्रव्यविशेषमिति विश्वरूपः। इत्याचमनप्रकरणम्।

अथ दन्तधावनम्।

नरसिंहपुराणे,—

मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः।
तस्माच्छुष्कमथार्द्रं वा भक्षयेत् दन्तधावनम्॥
खदिरश्च कदम्बश्च करञ्जश्च वटस्तथा।
तिन्तिड़ीवेणुपृष्ठञ्च आम्रनिम्बौ तथैव च॥
अपामार्गश्च विल्वश्च अर्कश्चोदुम्बरस्तथा।

नारदः,—

एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि॥
दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम्।
आम्रपलाशविल्वानामपामार्गशिरीषयोः।
वदरस्य कदम्बस्य करवीरकरञ्जयोः॥
सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः।
कटुतिक्तकषायाद्या धनारोग्यसुखप्रदाः॥
अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते।
प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत्॥

अत्र भक्षयेदिति भक्षणधर्म्मप्राप्त्यर्थं तेनाद्यन्तयोर्द्धिराचमनम्। आचमनस्य भोजनाङ्गत्वं भोजनप्रकरणलेख्यम्।

कात्यायनः,—

नारदाद्युक्तवार्क्ष्यमष्टाङ्गुलमपाटितम् ।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधापयेत् ॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥
आयुर्बलं यशोवर्चः प्रजापशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधाञ्च तन्नो धेहि वनस्पते ॥

इति काष्ठाभिमन्त्रणम् ।

विष्णुः,—

न दक्षिणापराशामुखः । उदङ्मुखः प्राङ्मुखो वा वटाशनार्कखदिर-करञ्ज-करवीरसर्जारि-मेदापामार्गमालतीककुभ[1]बिल्वानामन्यतमं कषायं कटुतिक्तं वा कनीनिकास्थौल्यं सकूर्चं द्वादशाङ्गुलं,

प्रातर्भुक्त्वा च यतवाक् भक्षयेद्दन्तधावनम् ।

हारीतः,—

काले पालाशकोविदारश्लेष्मातकतिल्वकशाकवृक्षनिर्गुण्डीशिखण्डी-वेणुवर्जं प्लक्षमासकवदरीकरञ्जशम्यशनकानीत्येके । दधित्थ-हरितक्याश्वकर्णशालाशनकानीत्यपरे । बिल्वखदिराम्रपालाश-शिरीषापामार्गाणामन्यतममनार्द्रम् । नातिशुष्कं नातिस्थूल-मपोथिताग्रं अनोष्ठयन्युदङ्मुखो वा वाग्यत आसीनोदन्तकाष्ठं भक्षयेत् । काले उषःकाले तिल्वकः, बिल्वकः । शाकवृक्षः

(१) वकुलकुरुविन्दानामन्यतमम् ।

शागवन इति प्रसिद्धः । शिखण्डी मयूरशिखा । दधित्थः कपित्थः, एके अपरे, इत्युभयत्रापि वर्जयित्वेति शेषः, पालाशः आम्रातकवृक्षः, आर्द्रं सद्यश्छिन्नं ततोऽन्यदनार्द्रं अपोथिताग्रमीषच्चूर्णिताग्रम्, अनोष्ठग्रन्थि, दन्तधावनकाले ओष्ठसमीपग्रन्थिरहितम् ।

विष्णुः, न पलाशं दन्तधावनं स्यात् ।

न श्लेष्मातकारिष्टविभीतकधवधन्वनवर्ज्जितम् ।
न कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलुः ॥
न बन्धुकनिर्गुण्डीशिग्रुतिल्वतिन्दुकः ।

न पारिभद्राम्लिकामोचकशाल्मलीशणवर्ज्यम्, मधुरं नार्द्रं नोर्द्ध्वशुष्कं न शुषिरं न पूतिगन्धं, न पिच्छिलं, दन्तकाष्ठं, भक्षयेदित्यर्थः । धन्वनः, धमनः, पीलुः, गुड़फलं, पारिभद्रः, पालधुया इति प्रसिद्धः ।

स्मृत्यन्तरे,—

गुवाकतालहिंतालास्तथा ताली च केतकी ।
खर्जूरं नारिकेलं च सप्तैते तृणराजकाः ॥
तृणराजपलाशैश्च न कुर्य्याद्दन्तधावनम् ।
इष्टकालोष्ट्रपाषाणैर्नखैरङ्गुलिभिस्तथा ॥
मुक्ता चानामिकाङ्गुष्ठौ वर्ज्जयेद्दन्तधावनम् ।

अत्र ये क्षीरकण्टकितिक्तकटुकषाया अपि निषिद्धास्तेषां विहितनिषेधे विकल्पापत्तेः पर्य्युदासात्प्रतिनिधित्वेनाप्युपादानम् ।

आसनं शयनं यानं पादुके दन्तधावनम् ।
वर्ज्जयेद्भूतिकामस्तु पालाशं नित्यमात्मवान् ॥ इति—

वाक्यात्कषायक्षीरिणोऽप्यस्य न प्रतिनिधित्वमपि ।

महाभारते,—प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः ।

दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरालतः ॥

क्षीरिणोवृक्षगुल्मादा भक्षयेद्दन्तधावनम् ।

त्याज्यं सपत्रमज्ञातमूर्द्ध्वशुष्कं च पाटितम् ॥

त्वग्विहीनं ग्रन्थिमुखं तथा पालाशशिंशपम् ।

ऋजुं वितस्तिमात्रं च कीटादिभिरदूषितम् ॥

पारस्करः,—

दन्तप्रक्षालनादीनि नित्यमपि, अन्नाद्यायेति मन्त्रः, तेन दन्तधावनाङ्गं, परिजप्य च मन्त्रेणेति कात्यायनोक्तौ काष्ठसंस्कारत्वेन मन्त्रजपविधिरिति भिन्नार्थत्वादनयोः समुच्चयः आयुर्बलं यशोवर्चं इत्यादिमन्त्रलिखितः ।

अन्नाद्याय व्यूहध्वꣳ सोमोराजाय मागमत् ।

समे मुखं प्रमार्क्ष्यते यशसा च बलेन च ॥

इति पारस्करसौत्रोमन्त्र एतिद्वयं पठनीयम् ।

विष्णुः,—

प्रक्षाल्य भङ्क्त्वा तज्जह्यात्शुचौ देशे प्रयत्नतः ।

भारते—पतितेऽभिमुखे सम्यग्भोज्यमाप्नोत्यभीप्सितम् ॥

ऐश्वर्यभङ्गमाप्नोति क्षिप्ते तदशुचौ भुवि ।

नरसिंहपुराणे—

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः ॥

दन्तानां काष्ठसंयोगोदहत्यासप्तमं कुलम् ।

महाभारते,—

भक्षयेत् शास्त्रदृष्टानि पर्व्वस्वपि च वर्ज्जयेत् ॥

तानि विष्णुपुराणे—

चतुर्द्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।

पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥

स्मृत्यन्तरे—

श्राद्धे जन्मदिने चैव विवाहे मुखदूषितं ।

व्रते चैवोपवासे च वर्ज्जयेत् दन्तधावनम् ॥

न भक्षयेद्दन्तकाष्ठमेकादश्यां नरेश्वर ।

आदित्यदिवसे चैव तस्मादेनोमहद्भवेत् ॥

तथाच—

श्राद्धादिभोजनोत्तरदन्तधावनस्य सुखार्थदन्तधावनस्यापि निषेधो भोगत्वात् ।

सर्वभोगविवर्जित इति वचनात् ।

व्रतोपवासदिवसे खादित्वा दन्तधावनम् ।

गायत्र्याः शतशः पूता अपः प्राश्य विशुद्ध्यति ॥

अत्र अङ्गवैगुण्येऽपि धर्म्मः, नित्यकर्म्मान्तरवदशक्तिकृताङ्गहानेऽपि-फलोदयात्, काष्ठान्तरेण जिह्वोल्लेखः, तोयगण्डूषैर्बहुशो मुख-क्षालनं, दन्तकाष्ठप्रत्याम्नातत्वेन गण्डूषकरणे सकृदेवाभिमन्त्रणं, द्वादशगण्डूषाणामेकसाधनत्वात्,

पैठीनसिः,—

अलाभे वा निषेधे वा काष्ठानां दन्तधावनम् ।
पर्णेन वा विशुद्धेन जिह्वोल्लेखं समाचरेत् ॥

स्मृत्यन्तरे,—

कुहूषष्ठ्योर्नवम्यां वै पक्षादौ दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव हि ॥

व्यासः,—

अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥[१]

एवमादिषु पर्णगण्डूषयोर्विकल्पः, पर्णपक्षेणोह्यः, तस्यापि ब्रह्मज-त्वात्, अतएवास्मद्देशे सर्व्वदा आम्रपक्षेणैव दन्तधावनसमाचारः, निषिद्धदिनेऽप्यदुष्टत्वात्, गण्डूषकरणपक्षे, धान्यमसीत्यत्र रतसेमां समसीतिवत् बहुजलगण्डूषे इत्यूहः कार्य्यः, मुमुक्षोरग्निहोत्राद्यनु-ष्ठानवत्, आयुरादिमन्त्रोक्तकामनारहितस्यापि मन्त्रः पठनीयः ।

विष्णुपुराणे,—

स्वाचान्तश्च ततः कुर्य्यात्पुमान् केशप्रसाधनम् ।
आदर्शाञ्जनमाङ्गल्यदूर्व्वाद्यालम्भनानि च ॥

देवीपुराणे,—

नेत्राञ्जनं निषेवेत दन्तधावनपूर्व्वकम् ।

(१) न रात्रिवासः स्नायादिति वचनात् तावत् वस्त्रान्तरपरिधानमुक्तम् । तत् पुरीषोत्सर्गशौचानन्तरवस्त्रान्तरपरिधानेनैव चरितार्थम् ।

मनुः—

मैत्रं प्रसाधनं चैव दन्तधावनमञ्जनम् ।

पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम् ॥

अञ्जनं सौवीराञ्जनमिति लक्ष्मीधरः, वैद्यशास्त्रोक्तमञ्जनग्रहणञ्च, स्नातकधर्म्मत्वान्नित्यम् ।

इति दन्तधावनप्रकरणम् ।

## अथ प्रातःस्नानम्।

न रात्रिवासः स्नायादिति ब्रह्माण्डे यद्वस्त्रान्तरपरिधानमुक्तं तत् पुरीषोत्सर्गशौचानन्तरवस्त्रान्तरपरिधानेनैव चरितार्थम्।

विष्णुः,—

प्रातःस्नाय्यारुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्।

कात्यायनः।

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवत्॥
अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः॥

यथाहनीति मध्याह्नस्नानेऽतिकर्त्तव्यतातिदेशः, दन्तान् प्रक्षाल्येति दन्तधावनस्य प्रायत्यार्थत्वात्दन्तधावनानन्तर्यं प्रातःस्नानस्योक्तं, अनातुरः स्नानवर्ज्जिष्णुरोगरहितः, गृहे चेदिति तत्प्रातःस्नानं उपप्लवादिना गृहे क्रियते चेत् तदा स्नानाङ्गमन्त्ररहितस्नानम्, अन्तर्जलजपमन्त्रस्तु तोयकुम्भेनाभिषिच्यमानस्यापि स्यादेव, तत्र युक्तिरग्रे वाच्या।

दक्षः,—

लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः॥
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम्।
अस्नात्वा नाचरेत्कर्म्म जपहोमादि किञ्चन॥

प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभम् ।
सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥

दृष्टं मलापनयनद्वारा शरीरशुद्धिः, अदृष्टं नित्याचरणात्पापक्षयः,

विष्णुः,—

स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि ।
पवित्राणां तथा जाप्ये दाने च विधिचोदिते ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्व्विचिन्तितम् ।
अम्भात्रेणाभिषिक्तस्य नश्यन्तीति च धारणा ॥
याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

कालकर्णी दुःसहदुरिता बालविधवा वा, दुर्व्विचिन्तितं स्वानिष्ट-चिन्तनं, अम्भात्रेण उद्धृतानुद्धृतसाधारणेन,

व्यासः,—प्रातः संक्षेपतः स्नानं होमार्थं तद्विधीयते ।
मृन्मात्र[1]विधिनिष्पाद्यं मध्याह्ने तत्सुविस्तरम् ॥

होमार्थं विस्तराभावस्यार्थवादत्वान्निरग्नेरपि प्रातः संक्षेपविधिः । एवं प्रातरुक्तसंक्षेपविधिर्मध्याह्नेऽप्यशक्तस्य । एवं काम्येऽपि तीर्थ-स्नानादौ संक्षेपविधिरनुकल्पः ।

अनुकल्पस्याप्यतिदेशात्, काम्ये तु विशेषः अशक्तस्य प्रातः संक्षेपेण करणेन न फलं, नित्ये तु अशक्तावपि संक्षेपेण नित्यकरणे प्रत्यवा-याभाव एव, न पापक्षयरूपं फलम् ।

---

(१) मृन्मन्त्रविधिनिष्पाद्यम्

प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते ।
न साम्परायिकं तस्य दुर्म्मतेर्व्विद्यते फलमित्यभिधानात्,

तथाच स्मृतिः,—

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्व्विज्ञेया न तु स्नानफलं लभेत् ॥

योगियाज्ञवल्क्यः,—

उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

उषसि अरुणोदये, सन्ध्यायां सूर्य्योदयात् प्राक् एवञ्च उदिते रवावित्यनुकल्पः ।

शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढ़ास्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥

आपस्तम्बः,—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते ।
तर्पणन्तु भवेत्तत्र अङ्गत्वेन तु निश्चितम् ॥

इति वचनान्नित्ययोः प्रातःस्नानमध्याह्नस्नानयोः काम्यतीर्थादिस्नाने च स्नानाङ्गतर्पणम् । न तु क्रियाङ्गमलापकर्षणस्नानयोः, स्नानदेशादिविचारोमाध्याह्निकस्नानप्रकरणे लेख्यः, परकृततड़ागे सप्तपिण्डानुद्धृत्य जलं प्रविशेत् ।

कूपतड़ागातिरिक्तपरकृतजलाशये पञ्च मृत्पिण्डान्, परकृतकूपे पिण्डत्रयं, केषाञ्चिन्मते जलकुम्भत्रयमात्रोद्धरणं, सेतुजले पिण्ड-त्रयं, कुम्भत्रयोद्धरणञ्च, इत्याद्यपि तत्र लेख्यम्।

बौधायनः, श्मशानमापोदेवगृहं गोष्ठं यत्र च ब्राह्मणाः, अप्रक्षाल्य पादौ नान्तःप्रवेष्टव्यम्।

तथात्रिः, पादौ प्रक्षालयेदिति। इदमनुकृतस्नानाङ्गं, स्नानाङ्ग-तर्पणञ्च अङ्गत्वादेव स्नानसमकालं कर्त्तव्यम्। तदसम्भवात्तत्पूर्व्वं पश्चाद्वा कर्त्तव्यम्। तत्र साक्षिवचनाभावात् स्नानसमनन्तरमेव कार्य्यम्।

किञ्च स्नानस्य कर्म्माधिकारसम्पादकत्वमपूर्व्वद्वारकं, अपूर्व्वञ्च तर्पणाद्यङ्गसहितात् स्नानात् स्नानमात्रात्, तेन सन्ध्याधिकार-सिद्ध्यर्थं स्नानं तर्पणं च कार्य्यम्।

स्मरन्ति रत्नमालायाम्,—

आचम्य प्रयतः पूर्व्वं स्नानं प्रातः समाचरेत्।
स्नात्वा संतर्पयेद्विद्वान् ऋषीन् पितृगणांस्तथा॥
आचम्य प्रयतो नित्यं पुनराचम्य वाग्यतः।

संमार्ज्य मन्त्रैरित्यादिना तर्पणानन्तरं सन्ध्याकरणस्य वाचनिक-त्वात्। इदञ्च स्नानाङ्गतर्पणं शिरःस्नातस्यैव, सर्व्वाङ्गजलसंयोगस्यैव स्नानशब्दार्थत्वमिति वक्ष्यते।

तथाच मार्कण्डेयपुराणे,—

शिरःस्नातस्तु कुर्व्वीत दैवं पैत्र्यमथापि वा।

यत्तु वामनपुराणे—

स्नात्वा शिरःस्नानमथाह्निकं वा संतर्प्य तोयेन पितॄन् मनुष्यानिति।

तदनुवादित्वाच्छिरःस्नानपक्षे संतर्पयेदेवं परम्।

जावालः, स्नानप्रकरणे,—

नार्द्रमेकं च वसनं परिदध्यात् कथञ्चन।

पद्मपुराणे,—

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत्।

तीर्थं प्रकल्पयेद् विद्वान् मूलमन्त्रेण मन्त्रवित्॥

नमो नारायणायेति मूलमन्त्र उदाहृतः।

दर्भपाणिस्तु विधिना ह्याचान्तः प्रयतः शुचिः॥

चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः।

प्रकल्प्याऽऽवाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः॥

विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता।

पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तकात्॥

तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्।

दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि॥

नन्दिनीत्येव ते नाम देवेषु नलिनीति च।

नन्दा पृथ्वी च सुभगा विश्वकायासि वासिता॥

विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी[1]।

'अम्बा'[2] च जाह्नवी चैव शान्ता शान्तिप्रदायिनी॥

(१) लोकनिवासिनी।

(२) क्षेमा।

एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत्।
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी॥
सप्तवाराभिजप्तेन करसंपुटयोजितम्।
मूर्द्ध्नि कुर्य्याज्जलं भूयस्त्रिचतुः पञ्च सप्त वा॥
स्नानं कुर्य्यान्मृदा तद्वदामन्त्र्य तु विधानतः।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥
उद्धृतासि वराहेण कृष्णेन शतबाहुना।
नमस्ते सर्व्वलोकानां प्रभवारिणि सुव्रते॥

इति मन्त्रं समुच्चार्य्य गङ्गेऽत्रागच्छेत्यावाहनम्। तीर्थेषु स्नाने न गङ्गावाहनं, न नदीषु नदीं ब्रूयादिति निषेधात्।

विस्तरस्तु माध्याह्निकस्नानप्रकरणे लेख्यः। अयं विधिर्वैदिकमन्त्ररहितत्वात् सर्व्ववर्णसाधारणः संक्षिप्तश्च। अस्य विधेर्माध्याह्निकस्नानपरत्वेऽपि अनुकल्परूपत्वमेव, तेन प्रातःस्नाने दक्षस्मृत्या समकल्पत्वानानुवादरूपता।

एवञ्च मज्जनस्य पाक्षिकत्वान्न स्नानशब्दार्थत्वं; किन्तु सर्व्वाङ्गजलसंयोग एव स्नानम्, अनुद्धृतैरुद्धृतैर्वेति एकस्य स्नानपदस्यानुद्धृतपक्षे मज्जनपरत्वेन मुख्यत्वमुद्धृतपक्षे गौणत्वमिति विरोधात्। तेन सर्व्वाङ्गजलसंयोग एव स्नानशब्दार्थः, अन्तर्जलजपश्च तोयकुम्भेनाभिषिच्यमानस्य स्यादेव। अनुद्धृतपक्षे इत्युक्ता च जले नाभिप्रमाणे मन्त्रपूर्व्वकमिति शास्त्रवचनान्नाभिमात्रजले स्नानम्।

संक्षेपमाह योगी याज्ञवल्क्यः,—

स्नानमन्तर्जलञ्चैव मार्ज्जनाचमने तथा।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम्॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः।
अन्यान् वा वारुणान् मन्त्रान् कामतः सम्प्रयोजयेत्॥

पूर्व्वप्रतिपन्नपदार्थानुवादेन मन्त्रविधानात् पाठक्रमादर्थक्रमो बलवत्तर इति न्यायाच्च पूर्व्व एव क्रमः। तथाच तीर्थावाहन-जलालम्भनान्तर्जलजपमज्जनानि षट्।

असामर्थ्यान्न कुर्य्याच्चेत्, तत्रायं विधिरुच्यते।

इति प्रथमतोऽभिधाय नित्यश इत्यभिधानात् प्रातःस्नाने नित्यं संक्षेपविधिर्म्मध्याह्ने विस्तरासामर्थ्ये सत्येवेति वाक्यार्थः, तेन निरग्नेरपि प्रातः संक्षेपविधिरिति सिद्धम्।

त्रिरावृत्ताघमर्षणस्नानविधिर्म्माध्याह्निके लेख्यः। अन्यवारुण-मन्त्रपक्षेषु अत्र षड्वारुणपक्षो लिख्यते। वहिरेव जलेन देहक्षालनं, मृदा त्रिःपादप्रक्षालनं, आचमनं, वस्त्रद्वयधारणं, पवित्रोपग्रहधारणं शिखायज्ञोपवीतानुसन्धानं जले प्रवेशः। उद्धृतोदकपक्षे प्राङ्मुखतया उदङ्मुखतया वोपवेशनं, त्रिमात्रप्रणवो-च्चारम्। इमं म' इति मन्त्रस्य प्रजापतिः' ऋषिः गायत्रीच्छन्दः वरुणो देवता तीर्थावाहने विनियोगः। "इमं मे वरुण श्रुधी हव-मद्या च मृलय त्वा मवस्यु राचके" अनेन तीर्थावाहनम्। तत्त्वा यामीति मन्त्रस्य प्रजापतिः ऋषिस्त्रिष्टुप् छन्दः वरुणो देवता जलाभिमन्त्रणे विनियोगः। तत्त्वा यामि ब्रह्मणा वन्दमानः

तदाशास्ते यजमानो हविर्भिः अहेलमानो वरुणेह बोध्यु रुशंऽ समान आयुः प्रमोषीः।

अनेन मन्त्रेण जलस्यावर्त्तनरूपमभिमन्त्रणम्।

उरुंहीति मन्त्रस्य, शुनःशेफ ऋषिः, त्रिष्टुप्छन्दः, वरुणोदेवता जलपाने, विनियोगः,

उरुं हि राजा वरुणश्चकार
सूर्य्याय पन्था मनवे[1] तवाउ।
अपदे पादाप्रतिधातवेक
रुपवक्ता हृदयाविधि[2]श्चित्॥

अनेन जलपानं, द्विराचमनम्। योऽस्मांन्तमित्यस्य मन्त्रस्य, प्रजापतिः ऋषिः, गायत्रीछन्दः, वरुणोदेवता मार्जने विनियोगः। योऽस्मांन्तं जिघांऽसति तमभ्यु[3]मिति वरुणः, परो मत्तः परस्मा। अनेन मार्जनम्। धाम्न इत्यस्य मन्त्रस्य, प्रजापतिःऋषिः मुञ्चेत्यन्तं यजुः, यदाहुरिति गायत्रीछन्दः, वरुणोदेवता, अन्तर्जलजपे विनियोगः, धाम्नोधाम्नो वरुणऽ स्ततोवरुण नोमुञ्च।

यदाहुरघ्न्या वरुणेति शपामहे ततो वरुण नोमुञ्च, अनेन जले निमज्ज्य जपः। उदुत्तममित्यस्य मन्त्रस्य, शुनःशेफऋषिः, त्रिष्टुप्छन्दः, वरुणोदेवता, स्नाने विनियोगः। उदुत्तमं वरुणपाश-मस्मदवाधमं विमध्यमऽश्रथाय, अथावयमादित्य व्रते तवानागसो-

---

(१) मन्वे।
(२) विध।
(३) तमभ्यमीति।

ऽदितये स्याम, इति मज्जनम्। विष्णुस्मरणं सर्व्वस्नानेषु। स्नानं प्रवाहाभिमुखस्य प्रवाहाभावे सूर्य्याभिमुखस्य। तत्र जलएव स्थित्वा माध्याह्निक वक्ष्यमाणविधिना वस्त्रनिष्पीड़नान्तं स्नानाङ्ग-तर्पणं यद्यपि प्राप्तं, तथापि, सन्ध्याहोमकालविलम्बशङ्कया संक्षेपतर्पणम्।

तथाच ब्रह्माण्डपुराणे,—

स्नात्वा तु विधिवत्प्रातर्दद्यात्त्रीनुदकाञ्जलीन्।
सव्येन चोपवीतेन मन्त्रेणानेन मन्त्रवित्॥
आब्रह्मस्तम्बपर्य्यन्तं जगदेतच्चराचरम्।
मया दत्तेन तोयेन तृप्यत्वितच्चतुर्विधमिति॥

इमं मन्त्रं प्रत्यञ्जलि पठित्वा देवतीर्थेन सव्यस्य जलाञ्जलित्रय-दानम्। स्नानानन्तरं पैठीनसिः, अन्तरुदक-आचान्तोऽन्तरेव शुद्धो भवति, वहिरुदक आचान्तोवहिरेव शुद्धो भवतीति तस्मादन्तरेकं वहिरेकञ्च कृत्वा पादमाचामेत्,

शङ्खः, अनेन विधिना स्नात अम्मध्ये स्नानवाससा।
परिवर्त्तितवासाश्च तीर्थतीरमुपस्पृशेदिति।

स्नानाङ्गतर्पणादौ स्नानवस्त्रस्य न परित्यागः। विष्णुः, सोष्णीषे धौते वाससी विभृयात् नाङ्गेभ्यस्तोयमुद्धरेत्। अत्र उष्णीषधारणं शिरोजलनिर्णेजनार्थं, तथाच द्रोणपर्व्वणि युधिष्ठिरस्नाने।

राजहंसनिभं प्राप्यमुष्णीषं शिथिलार्पितम्।
जलक्षयनिमित्तं वै वेष्टयामि स्वमूर्द्धनि॥

तेनाङ्गस्य इति शिरोभिन्नाङ्गविषयं, हारीतः, स्नात्वा न गात्र-मवमृज्यात्, एतच्च स्नानाङ्गम्।

तथा,—

स्नातोऽङ्गानि वस्त्रेण पाणिना वा न मार्ज्जयेदिति वस्त्रपाण्यो रुद्देश्य विशेषणत्वादविवक्षा, तेन वस्त्रान्तरेणापि प्रकारान्तरेण वा मार्ज्जने स्नानवैगुण्यं नाधर्म्मः।

यत्तु,—

हस्तेन मार्ज्जिते गात्रे स्नानवस्त्रेण मार्ज्जिते।
शुनोच्छिष्टं भवेद्गात्रं पुनःस्नानेन शुद्ध्यतीति॥

तद्रोगादिनाऽसहिष्णोरर्थप्राप्ते मार्ज्जने स्नानवस्त्रहस्तनिषेधपरम्, इति प्रातःस्नानम्। अतः स्नानाङ्गानि, बौधायनः, न नग्नः स्नायात्। स्नानाधिकारे जावालः,—

नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन।

तथाच,—नग्नः कौपीनवासा वा द्विवासाः स्नाति यो नरः।
वृथा स्नानफलं तस्य निराशाः पितृदेवताः॥

इति अधोवस्त्रद्वित्वे बोध्यम्। शङ्खलिखितौ, अनश्नन्नग्नः स्नायात्, नाप्सु मेहनोद्घर्षणं कुर्य्यात् न पादेन पाणिना वोदक-मभिहन्यात् न स्रवन्तीं वृथातिक्रमेदनवसिच्य, अमेध्योदकं परि हरेत्, अल्पोदके न स्नायात्, न समुद्रोदकमवगाहेत। अनश्नन् ताम्बूलादिकमभक्षयन् स्नायादित्यर्थः, मेहनं मूत्रोत्सर्गं, अङ्ग-प्रक्षालनार्थं उद्घर्षणं जले न कुर्य्यात्, अनवसिच्य, तर्पणमकृत्वा, नदीमतिक्रम्य न गच्छेत्। एतच्च तर्पणकाले दृष्टार्थत्वात्, अमेध्यो-

दकपरिहारः। सर्व्वजलकार्य्येषु नाल्पोदके स्नायात्, प्रभूतोदक-संभवे। समुद्रोदकं नावगाहेत न बहुतरं गच्छेत्।

योगी याज्ञवल्क्यः।

पादेन पाणिना वापि यच्च वस्त्रेण चोदकम्।
न हन्यान्न च बाधेत न च प्रक्षोभयेत्तथा॥
न कुर्य्यात् कस्यचित् पीड़ां कर्म्मणा मनसा गिरा।
आचरन्नभिषेकं तु कर्माण्यन्यानि नाचरेत्॥

अन्यानि पूर्व्वोक्तानि पादघातप्रभृतिपरपीड़ापर्य्यन्तानि नाचरेदिति लक्ष्मीधरः। एतदपि स्नानाङ्गम्।

देवलः,—

न नदीषु नदीं ब्रूयात् पर्व्वते न च पर्व्वतम्।
नान्यं प्रशंसेत् तत्रस्थस्तीर्थेष्वायतनेषु च॥

तथा, न चैत्वलेपहारयोः स्नायात्, चत्वरं पश्वादिसलिदानस्थानं, उपहारः द्वारसमीपम्।

बौधायनः,—

श्मशानमापोदेवगृहं गोष्ठं यत्र च ब्राह्मणाः।

अप्रक्षाल्य पादौ नान्तः प्रवेष्टव्यम्। तथा त्रिः पादौ प्रक्षालयेदिति इदमनुद्धृतस्नानाङ्गम्।

विष्णुः-न स्नानवर्णकक्षौरम्रं प्रयच्छेदन्यत्र देवगुरुब्राह्मणेभ्यः।

स्नानं स्नानसाधनं कुशादि, वर्णकं, सुगन्धिद्रव्यम्।

शङ्खः,—

उदकस्य प्रदानार्थं स्नानशाटीं न पीड़येत्।

*योगी याज्ञवल्क्यः,—*

*यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत्।*

तावन्न पीड़येद्वस्त्रं येन स्नातो नचोदके॥

येन वस्त्रेण स्नातस्तर्पणात्पूर्व्वं तद्वस्त्रं न पीड़येत्।

एतदपि स्नानप्रकरणात्तदङ्गम्।

नारसिंहे,—

नद्यां स्रवत्सु च स्नायात् प्रतिस्रोतः स्थितो द्विजः।

तड़ागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत्॥

योगी याज्ञवल्क्यः,—

नराद्यापः प्रसूता वै तेन नारा इति स्मृताः।

अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥

यो हि व्रतानां तपसां यमस्य नियमस्य च।

भोक्ता च यज्ञतपसां यो योगी ध्येय एव च॥

स्मरेन्नारायणं देवं स्नानादिषु च कर्म्मसु।

प्रायश्चित्तेषु सर्व्वेषु दुष्कृतान्मुच्यते पुमान्॥

प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत्।

स्मरणादेव तद्विष्णोः संम्पूर्णं स्यादिति स्मृतिः॥

एवञ्च सर्व्वस्नानाङ्गभ्रंशे प्रायश्चित्तमिदं, विशेषेणानभिधानात्, अन्यकर्म्मभ्रंशेऽपि वाक्यसंयोगात्।

यत्तु, बौधायनः, नाप्सु सतः प्रयमनं विद्यते, न वाससः पल्पूलनं नोपस्पर्शनं, यद्युपरुद्धाः स्युरेतेनोपतिष्ठते, नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः। प्रयमणं

प्लवनं, वासःपल्लवनं वासोमलच्चालनं, उपस्पर्शनं देहमलच्चालनम्। अज्ञानाद् यदि प्लवनादिभिरेभिराप उपहताः स्युः, तदेतत् क्रियत-इत्यर्थः, इति स्नानकालीनान्याङ्गानि।

स्नानासामर्थ्ये योगी याज्ञवल्क्यः,—

असामर्थ्यात् शरीरस्य कालशक्त्याद्यपेक्षया।
मन्त्रस्नानादयः सप्त केचिदिच्छन्ति सूरयः॥
आपोहिष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम्।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्॥
यत्तु, सा उपवर्षेण स्नानं तद् दिव्यमुच्यते।
वारुणश्चावगाहस्तु मानसं विष्णुचिन्तनम्।
कालदोषादसामर्थ्यात् सर्व्वं तुल्यफलं स्मृतम्।
मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः।
आत्मतीर्थप्रशंसायां व्यासेन गदितं यथा॥

आपोहिष्ठेति मार्ज्जनमन्त्रोपलक्षणम्। सर्व्वं तुल्यफलमिति। यद्यपि वारुणं मुख्यं, मन्त्रस्नानादिकमपि तदसम्भवे तत्कार्य्यकारित्वा-त्तुल्यफलम्। आत्मतीर्थप्रशंसायाम्।

आत्मा नदीसङ्गमपुण्यतोया सत्यह्रदा शीलतटा दयोर्म्मिः।
तत्रावगाहं कुरु राजपुत्र न वारिणा शुद्ध्यति चान्तरात्मा॥

इति व्यासवाक्यम्, तेनैतद्वाक्यशेषादन्तःकरणरूप-निराकारविष्णुचिन्तनं मानसं, साकारचिन्तनं तदसामर्थ्ये। वशिष्ठः,—स्वस्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत्।

तत्पादोदकधाराश्च निपतन्तीं स्वमूर्द्धनि॥

चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्विकां तनुम्।
तया संक्षालयेत्सर्व्वमन्तर्देहगतं मलम्॥
इदं स्नानवरं मन्त्रस्नानाच्छतगुणं स्मृतम्।

एवञ्च मानसं सर्व्वोत्कृष्टमिति, तदसम्भवेऽनुकल्पान्तरं, तत्र ब्राह्मापरनामकं मन्त्रस्नानं,

यथा योगी याज्ञवल्क्यः,—

शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम्।
एतैश्चतुर्भिर्ऋङ्मन्त्रैर्मन्त्रस्नानमुदाहृतम्॥

अथ भौमस्नानं यथा, अङ्गप्रोञ्छनादि कृत्वा गङ्गामृत्तिकादिना सर्व्वाङ्गलेपनम्। तत्र मन्त्रः,—

अनेनैव वराहेण उद्धृतासि वरप्रदे।
कृष्णेनाक्लिष्टकार्य्येण चक्रहस्तेन विष्णुना॥
धरणि त्वं महाभागे भूमिस्त्वं धनुरव्यये।
लोकानां धरणि त्वं हि मृत्तिके हर पातकम्॥
मनसा कर्म्मणा वाचा वरदे वारिजेक्षणे।
त्वयाहतेन शापेन जीवामस्त्वत्प्रसादतः॥

अयं मन्त्रो यद्यपि यज्ञवराहदंष्ट्रोद्धृतमृदालम्भे स्मृतः तथाप्यत्रातिदेशेन प्रवर्त्तते।

वराहदंष्ट्राभिन्नाया धराया मृत्तिकां द्विजः।
मन्त्रेणानेन योबिभ्रन्मूर्द्ध्नि पापात् प्रमुच्यते॥
आयुष्मान् बलवान् धन्यः पुत्रपौत्रप्रतिष्ठितः।
क्रमाद्भुवि दिवं प्राप्य कर्म्मान्ते मोदते सुरैरिति॥

काम्यो यो मृदालम्भः, स सन्ध्योत्तरं कार्य्यः। आग्नेयं यथा, तच्च भस्मना कार्य्यम्। तत्र मुख्यं गार्हपत्यभस्म, तदभावे स्मार्त्तभस्म, तदभावे पञ्चब्रह्मसाधकं भस्म। न सर्व्वथा लौकिकम्।

एवं संस्काररहितं न तु ग्राह्यं कथञ्चनेति निषेधात्। मन्त्रस्तु।

आग्नेयमग्निलिङ्गेन मन्त्रेण स्नानमाचरेत्।
वायव्यं वायुलिङ्गेन दिव्यं सौरेण सर्व्वदा॥

इति वाक्ये—भस्मस्नाने आग्नेयमन्त्रः।

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपाꣳरेताꣳसि जिन्वतीत्यनेन सर्व्वाङ्गे भस्मसंयोगः कार्य्यः। अथ वायव्यं, गोखुरोद्धूतरजसा वायुप्रचलितेन सर्व्वाङ्गे संयोगः।

तत्र मन्त्रः,—

वातो वावो मनोवा गन्धर्व्वाः सप्तविंशतिः।
तेऽग्रेऽश्वमयुञ्जꣳस्तस्मिन् जवमादधुः॥

अथ दिव्यस्नानं, तच्च अनभ्रवृष्टौ निरावरणस्यावस्थानम्। तत्र कृत्तिकादिविषमपर्य्यायायुग्मर्क्षेषु दिग्गजोज्झितं गङ्गाजलमिति बुद्धिः कार्य्या। रोहिण्यादिषु युग्मनक्षत्रेषु सूर्य्यरश्मिभिरानीतं गङ्गाजलमिति बुद्धिः कार्य्या।

उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यं इति मन्त्रमुच्चार्य्य अनभ्रवृष्टिमध्ये निरावरणोऽवतिष्ठते।

अथ मानसस्नानं, विष्णुपदं यद्यपि शुद्धचैतन्ये लाक्षणिकमेव तथाप्यविद्योपहितव्यापकत्वगुणपुरस्कारेण ब्रह्मण्येव मुख्यं, साकारि-

ऽपि गौणमेवेति, साकारनिराकारयोः गौणत्वाविशेषेऽप्याकृतीर्थ-प्रशंसायां व्यासेन गदितं यथेतिवाक्यशेषात्।

तेन निराकारस्यैव व्यासवाक्ये कीर्त्तनात् ब्रह्माकारान्तःकरणवृत्तिरेव मुख्यं मानसं स्नानं, तदसम्भवे चतुर्भुजाद्याकारविशिष्टस्य स्मरणं तस्यैव स्वरूपमिति। यद्वा अविद्याकल्पितव्यापकत्वगुणविशिष्टचैतन्यस्यैव मुख्यार्थत्वाद्गेयमिति।

यत्तु आकाशस्थमन्त्रमूर्त्तिविष्णुध्यानपूर्व्वकं तत्पादगलितामृतधारां ब्रह्मरन्ध्रेणान्तः प्रविष्टां विचिन्त्य तेन सर्व्वदेहक्षालनचिन्तनं तन्मन्त्रोपासकानां मानसस्नानम्। जावालः,—

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम्।
आर्द्रेण वाससा वापि मार्ज्जनं दैहिकं विदुः॥

इति स्नानद्वयम्। तथा,—

नाभेरधः प्रविश्याप्सु कटिं प्रक्षाल्य मृज्जलैः।
जलार्द्रकपटेनाङ्गशोधनं कापिलं विदुः॥

एतदपि शिरःस्नानासम्भवे, एतदसम्भवेऽङ्गप्रोञ्छनं कुर्व्वन्ति, इमान्यपि लालास्वेदादिलेपाप्रायत्यनिर्हरणार्थत्वेन प्रातःस्नानाशक्तौ अनुकल्परूपाणीति बोध्यम्। इति प्रातःस्नानं साङ्गं निरूपितम्।

---

## अथ वस्त्रपरिधानम् ।

याज्ञवल्क्यः,—

स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च ।
अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ॥
कुतपं योगपट्टं वा द्विवासा येन जायते ।

धौतं कार्पासं, शणसूत्रभवं शाणं, अतसीभवं क्षौमम् । गौतमः, वासांसि शाणक्षौमचीरकुतपाः सर्व्वेषां, कार्पासं वाविकृतं काषायमप्येके धार्य्यं ब्राह्मणस्य । चीरं कुशादिनिर्मितं, कुतपः पार्व्वतीयछागरोमनिर्म्मितः, कषायस्य निषेधो वक्ष्यते । आपस्तम्बः, आविकं सार्व्ववर्णिकम् ।

मनुः,—

न जीर्णमलवद्वासा भवेच्च विभवे सति ।

जावालिः,—

नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन ।

तथा परधृतं वर्ज्जयेत्, तदप्यसम्भवे धौतं सदा ग्राह्यमिति वक्ष्यते ।

तथाच, शुक्लं स्वयं क्षालितं शुष्कं अजीर्णं परिदध्यात्, वस्त्रं, अधोनाभ्यां उपरि जान्वाच्छादयीत इति वचनादतोन्यूनमिति, किञ्चिदाधिक्ये न दोषः ।

वामे पृष्ठे तथा नाभौ कक्षत्रयमुदाहृतम् ।
त्रिभिः कक्षैः परीधत्ते यो विप्रः स शुचिः स्मृतः ॥

तेन वेष्टितवस्त्रस्य प्रत्यक्प्रान्तं पृष्ठे, मध्यं वामकक्ष्यां, प्राक्प्रान्तं नाभौ, वस्त्रं देहान्तराले प्रवेशयेत्, एतदेवोक्तम्।

परिदध्याद्बहिःकच्छानिबद्धा ह्यासुरी भवेत्, एकदेशबहिर्भावेऽपि दोषः, पूर्व्वसदृशं वस्त्रं उत्तरीयञ्च कुर्य्यात्। उत्तरीयवस्त्रञ्च समाख्यया उत्तराङ्गाच्छादकं, तदेकदेशाच्छादनेऽप्यविरुद्धमेव। आपस्तम्बः, नाधोवस्त्रैकदेशेनोत्तराङ्गं च्छादयेत्, प्रतिनिधित्वेन प्राप्तस्यापि निषेधः।

यत्तु गृह्यं, एकञ्चेत् पूर्व्वस्यैवोत्तरवत्तं च्छादयीतेति तत्समावर्त्तनाङ्गमेव, तेन वस्त्रासम्भवे प्रतिनिधिरूपेण क्षौमाजिनवल्कलादिग्रहणम्।

अत्र च आपस्तम्बः,—

देवागारे तथा श्राद्धे गवाङ्गोष्ठे तथाऽध्वरे।
सन्ध्ययोरुभयोः साधुसङ्गमे गुरुसन्निधौ॥
अग्न्यगारे विवाहे च स्वाध्याये भोजने तथा।
उद्धरेद् दक्षिणं पाणिं ब्राह्मणानाञ्च सन्निधौ॥

इति उत्तरीयवस्त्रस्यापि यज्ञोपवीतवद्धारणम्। तथा च सव्येंऽशे उत्तरीयं निधाय दक्षिणं बाहुं उत्तरीयाद्बहिः कुर्य्यादित्यर्थः। श्राद्धञ्चापसव्यं वासो यज्ञोपवीतं कृत्वेति पित्र्ये नियमः, दैवेऽर्थादेव सव्ये धारणं, अन्यकर्म्मस्वनियमः।

शातातपः,—

सव्यादंशात्परिभ्रष्टं कटिदेशे धृताम्बरम्।
एकवस्त्रं विजानीयाद्दैवे पित्र्ये च कर्म्मणीति॥

लिङ्गात्सर्वदा सव्यांशे उत्तरीयधारणम्। नित्यमुत्तरीयं वासः कार्यमपि वा, सूत्रमेवोत्तरीयार्थं इति सूत्रमात्रं उत्तरीयार्थे विहितं तथापि।

*यज्ञोपवीते द्वे धार्ये श्रौतस्मार्तेषु कर्मसु।*
*तृतीयञ्चोत्तरीयार्थे वस्त्राभावे तदिष्यते॥* इति,

वचनादविरोधाच्च यज्ञोपवीतलक्षणोपेतं सूत्रमुत्तरीयं प्रत्याम्नातत्वेन धार्यम्। तस्य यज्ञोपवीतत्वात्यागेनैव वस्त्रवत्कार्यकारित्वान्न वस्त्रमन्त्रेणाभिमन्त्रणं, किन्तु यज्ञोपवीतमन्त्रेण,

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा।
नैकवस्त्रः प्रवर्त्तेत द्विजो वाचनिके जपे॥ इति,

यत्र यत्र एकवस्त्रनिन्दाकल्पितविधिना द्वितीयवस्त्रमुत्तरीयं कर्माङ्गत्वेन विधीयते तत्कार्येऽपि यज्ञोपवीतं विधीयते।,
एवञ्च, न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थित इति भोजनादावपि तथैव बोध्यम्।' तस्मात् नित्यधारणं पापक्षयरूपफलं, कर्मोपकारश्चेति तस्येति बोध्यम्। यत्तु,

नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि न। इति

न वासोभिः सहाजस्रमिति जपस्नानकालयोर्बहुवस्त्रनिषेधः, तत्र वस्त्रान्तरसत्त्वेऽपि यज्ञोपवीतस्य वस्त्रत्वाभावान्न बहुवस्त्रत्वदोषः। निष्पीड्य स्नानवस्त्रमित्यादौ स्नाने एकवस्त्रप्रतीतावपि होमदेवार्चनाद्यास्विति आद्यपदेन स्नानेऽप्युत्तरीयं विहितमेवेति न कश्चिद्दोषः। तत्र वस्त्रस्य नवत्वे अभिमन्त्र्य दध्यात्।

तत्र परिधानमन्त्रो यथा,—

परिधास्ये यशोधास्ये दीर्घायुत्वाय जरदष्टि रस्मि।

शतञ्च जीवामि शरदः सुवर्च्चा रायस्पोषमभिसंव्ययिष्ये ॥

*पूर्व्वधृते मन्त्राभावः, नवत्वे उत्तरीयमन्त्रो यथा,—*

*यशसा मा द्यावापृथिवी यशसेन्द्रावृहस्पती ।*

यशो भगश्च मा विदद्यशोमा प्रतिपद्यताम् ॥

नवोष्णीषमन्त्रो यथा,—

युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः।

तं धीराः स कवय उन्नयन्ति स्वाध्यायो मनसा देवयन्तः ॥

इति वस्त्रधारणम् ।

वस्त्रपरिधानानन्तरं योगि-याज्ञवल्क्यः,—

प्रक्षाल्योरु मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तथा ।

स्नात्वा संगृह्य वासोऽन्यं जंघे संशोधयेन्मृदा ।

उरू जंघाक्षालनं वारणस्नाने गुदजलसंसर्गशोधनार्थम् ॥

तथा च पराशरः,—

अपवित्रीकृते ते तु कौपीनच्युतवारिणा ।

कौपीनतोऽपानतश्च्युतेन वारिणेति लक्ष्मीधरव्याख्या। तत्र वस्त्रादीनां ग्राह्यत्वाग्राह्यत्वं तच्छुद्धिश्च विचार्य्यते ।

नरसिंहपुराणे,—न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते ।

उल्वणं अधोनाभ्या उपरि जान्वाच्छादयीतेति यत्प्रमाणादधिकं तथा नोत्तरीयाऽधोवाससोः विपर्य्यासं कुर्य्यात्, न रात्रिवासो दिवा परिदध्यात्, रात्रिवासःपदेन शयनकालीनवस्त्रम् ।

महाभारते,—

अन्यदेव भवेद्वस्त्रं शयनीये सदैव हि ।

*तथा सर्व्वरागान् वाससि परिवर्ज्जयेत्, कृष्णञ्च स्वाभाविकम् ।*

*तथा,—*

नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥

शंख:,—

नीलीरक्तं परीधाय भुक्त्वा स्नानार्हकस्तथा ।

त्रिरात्रं तु व्रतं कुर्य्याच्छित्त्वा गुल्मलतास्तथा ॥

स्नानार्हकश्च चण्डालादिस्पृष्ट:, नीलवासोधारणेऽधिकदोष इत्यर्थ: ।

स्मृत्यन्तरे,—

नग्न: काषायवासा: स्यात् नग्न: कौपीनवानपि ।

नग्नो द्विगुणवासा: स्यान्नग्नश्चार्द्रपटस्तथा ॥

अकच्छोऽनुत्तरीयश्च नग्नो वर्ज्यो विवस्त्रवत् ॥

ब्रह्माण्डे,—

पितृदेवार्च्चने होमे कुर्य्यात्कार्पासमंशुकम् ॥

क्षौमं वा वल्कलं वापि न कौशेयं कदाचन ॥

नोत्तरीयमध: कुर्य्याद्रात्रिवासो दिने तथा ।

न रात्रिवाससा स्नायाद्गात्रं नोन्मार्जयेत्तथा ॥

बौधायन:,—

काषायवासा: कुरुते जपहोमप्रतिग्रहान् ।

न तद्देवगमं भवति, हव्ये कव्ये तथा हवि: ॥

ब्राह्मे,—

प्रत्यहं चालयेद्वासो दैवे पित्र्येऽपि कर्म्मणि।

*इति पूर्व्वधृते केवलाम्बुचालनेन शुद्धिः। प्रत्यहमिति पूर्व्वधृत-विषयमेवेति बोध्यम्। अन्यथा एकस्य वस्त्रस्य बहुवारं परिधाने* चालनं विनापि शुद्धिः स्यात्। नचेष्टापत्तिः नाप्रक्षालितमिति-शास्त्रेण तन्निषेधात्। तद्वचनं च, नाप्रक्षालितं पूर्व्वधृतं वासो विभृयात्। इति वाक्यं यत्र गृहस्थधर्म्मप्रकरणे आम्नातं तत्रैव वस्त्रद्वयपरिधानं विहितं, तस्मात् चालनं कर्म्माङ्गमेव। अन्यथा फलकल्पनगौरवापत्तिः। तेन शीतवारणाद्यर्थे वस्त्रान्तरे नायं नियम इति प्राचीनाः। वस्तुतस्तु पूर्व्वपरिहितं वासः प्रक्षाल्यैव विभृयादिति वचनान्तरे परिहितपदादधोवस्त्रपरमेव चालनम्। एतत्समानार्थत्वात् पूर्व्वधृतमित्यपि अधोवस्त्रपरम्। तेनोत्तरीयस्य न प्रत्यहं चालनम्। एवमुत्तरीयस्य सीवनेऽप्यदोषः नग्नः स्यूत-पटस्तथेति नग्नपदोपादानादधोवस्त्रस्यैव सीवने दोषः। अतो नवोत्तरीयस्य सीवनमाचारो न विरुद्धः। किन्तु जीर्णवस्त्रस्य अधोवस्त्रोत्तरीयसाधारण्येन निषेधात् जीर्णोत्तरीयस्य सीवनमनु-चितम्।

महाभारते,—

स्वयं धौतेन कर्त्तव्याः क्रियाः सर्व्वा विपश्चिता।
न निर्णेजकधौतेन नाहतेन कदाचन॥

इति स्वधौतस्य कर्म्माङ्गत्वेन विधौ निर्णेजकधौतस्य प्रसङ्गा-भावात् तन्निषेधो नित्यानुवादस्तुत्यर्थः। न च प्रतिनिधित्वेन प्राप्तस्य

*निषेधः, वाक्यभेदापत्तेः । नापि पुरुषार्थवस्त्रधारणे निषेधः, वाक्यभेदादेव । कारुहस्तः सदा शुचिरिति दोषाभावाच्च ।*

केवलं रजकधौतवस्त्रपरिधानेन कर्म्मवैगुण्यं पुत्रादिधौत इव स्वधौतत्वाभावान्नाधर्म्मः ।

यत्तु भट्टैः, रजकधौतं गर्द्दभारूढवस्त्रपरिधानमध्ये गणितं तद्गर्द्दभस्पर्शदोषमभिप्रेत्य, गर्द्दभस्यास्पृश्यत्वात् । नचास्पृश्यस्पर्शने पुरुषस्यैव दोषो न वस्त्रस्येति वाच्यं चण्डालादिसंस्पृष्टवस्त्रस्य पुरुषवदेव दुष्टत्वोक्तेः ।

तदुक्तं भट्टैः,—

पुरुषस्य सचेलस्य स्नानं यस्माद्विधीयते ।

तस्मात् पुरुषवद्वस्त्रं न गवाश्वादिवन्मतमिति ॥

केवलं मूत्रपुरीषादिलेपान्नलेपानुच्छिष्टलेपान् प्रति सलेपान् प्रक्षाल्याचम्य प्रयतो भवतीति आपस्तम्बवचनादन्नपदस्य मूत्र-पुरीषपदसाहचर्य्येणाभोज्यान्नपरत्वाद्रजकान्नलिप्तं धौतं न ग्राह्यम् ।

वस्त्रादीनामल्पोपघाते देवलः,—

और्णकौशेयकुतपपट्टक्षौमदुकूलकाः ।

अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ॥

पट्टमतांशुपट्टं, सश्रीफलैरंशुपट्टं इति याज्ञवल्क्योक्तेः, कौशेयपदेन पट्टप्राप्तेः, पट्टोपादानस्य द्विरुक्तत्वापत्तेश्च । क्षौमपदस्याप्युपलक्षणं, समानयोनित्वात् । पुनःसोऽपि ।

अत्यन्तं मलिनं पूर्व्वमद्भिः क्षारैर्विशोधयेत् ।

बृहस्पतिः,--

वस्त्रवैदलचर्म्मादेः शुद्धिः प्रक्षालनं स्मृतम्।
अतिदुष्टस्य तन्मात्रं त्यजेच्छित्त्वा तु शुद्धये॥

देवलः,— तान्येवामेध्यलिप्तानि क्षालयेत् साधकैः स्वकैः।
धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपि॥

तानि और्णादिकानि।

विष्णुः,— अत्यन्तोपहतं यच्च क्षालनेन यन्न विरज्यते तच्छिन्द्यात्।

शिष्टाः,— तद्वन्निर्म्माल्यसंसृष्टवस्त्राणां क्षारवारिणा।

देवलः,—

तूलिकामुपधानञ्च रक्तपुष्पाम्बरं तथा।
शोषयित्वातपे किञ्चित् करैः संमार्ज्जयेन्मुहुः॥
पश्चाच्च वारिणा प्रोक्ष्य नियुञ्जीत स्वकर्म्मणि।
तान्यप्यतिमलिष्ठानि यथावत्परिशोधयेत्॥

पुष्परक्तमिति हरिद्रारक्तस्य उपलक्षणम्। रागद्रव्याणि प्रोक्षितानि शुचीनीति शङ्खवचनात्। एतच्च रागलोपभयात्, अतएव माञ्जिष्ठ-रागादौ क्षालनमेवेति विज्ञानेश्वरादयः। कार्पासतन्तुकृतं वस्त्रं दुकूलादिशब्दवाच्यम्। कौशेयं कृमिकोशोत्थं तसरिपट्टादि। और्णं अविलोमकृतं कम्बलादि। अंशुपट्टं वल्कलतन्तुकृतम्। अतसी-तन्तुकृतं क्षौमं तद्देशान्तरीयमिति विज्ञाः।

याज्ञवल्क्यः,--

सोषरोदकगोमूत्रैः शुद्ध्यत्याविककौशिकम्।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपस्तथा॥

उषरमृत्तिकासहितेन गोमूत्रेणोदकेन वा इत्यर्थः । बहुवचनं *पश्चादप्युदकप्रापणार्थम् । श्रीफलं बिल्वम् ।*

उशनाः, पट्टादेश्च शुद्ध्यन्तरमाह, कौशेयानां गौरसर्षप-कल्केनेति ।

याज्ञवल्क्यः, सगौरसर्षपैः क्षौमं शुद्ध्यतीत्यनुवर्त्तते । गौरः श्वेतसर्षपः । क्षौमवदेव शाणस्य समयोनित्वाच्छुद्धिरिति विज्ञानेश्वरादयः । नववस्त्रमखण्डस्पर्शे त्वविगानं समाचारप्रमाणकमिति प्राचीनाः ।

अङ्गिराः,—

शौचं सहस्ररोम्णां वाय्वर्केन्दूनाञ्च रश्मिभिः ।
रेतःस्पृष्टं शवस्पृष्टमधिकञ्च प्रदुष्यति ॥
शयनासनयानानि रौमाणानि च यानि तु ।
वस्त्राण्येतानि सर्व्वाणि संहितानि प्रचक्षते ॥

रौमाणानि कम्बलादीनि संहितानि शयनासनयानानि च वाय्वादिभिः शुद्ध्यतीति रुद्रधरः । पूर्व्वोपभुक्तमपि आसनादिवस्त्रं वाय्वादिभिः शुद्ध्यतीत्यवगम्यते, अन्यथा पूर्व्वोक्तशुद्धीनां वैयर्थ्यं स्यात् । तथा शय्यावस्त्रस्यार्ककिरणादिभिः शुद्धिः, स्वापएव नान्यकर्म्मणि ।

मृत्तिकाशतधौतेन रात्रिवासो न शुद्ध्यतीति शास्त्रात् । अन्यदेव भवेद्वस्त्रमित्यादि महाभारतोक्तौ शयनकालीनवस्त्र-यथेष्टाचारवस्त्रयोः कर्म्मणि निषेधाच्च । परकीयवस्त्रपरिधानविषये गौतमः, निर्णेज्यादशक्तौ ।

ब्राह्मे, सर्व्वं विण्मूत्रशुक्रैश्च दूषितञ्च मृदम्बुभिरिति उक्तत्वात् कल्काद्यसम्भवे मृज्जलाभ्यामपि पट्टादीनां शुद्धिः।

नीलीरक्तवस्त्रनिषेधेऽपवादमाह, स्मृत्यन्तरे।

कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति।
स्त्रीणां क्रीड़ार्थसंभोगे शयनीये तथैव च॥
स्त्रीधृता शयने निली ब्राह्मणस्य न दुष्यति।
नृपस्य वृद्धौ वैश्यस्य पर्व्ववर्जं न दुष्यति॥

प्रसङ्गाच्चर्म्मवालयोरपि शुद्धिर्लिख्यते।

चेलवच्चर्म्मणां शुद्धिः,

कृष्णाजिनानां बालैर्वा बालानां मृद्भिरम्भसा। काश्यपः, दृतीनां रञ्जनात् शुद्धिः। दृतिः चर्म्मकोषः, रञ्जनं काषायद्रव्येण शोधनम्। गृह्यपरिशिष्टे,—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः।

चर्म्मग्रहणं तद्विकाराणां वरत्रादीनामुपलक्षणमिति विज्ञानेश्वराः। एवं सर्व्वत्रापि विकृतिषु प्रकृतिशुद्धिरेवेति उपरिष्टादधोऽप्यवगन्तव्यम्। इति वस्त्रादिशुद्धिः॥

यज्ञोपवीतस्यावश्यकत्वं तत्प्रकारश्च लिख्यते, कात्यायनः,—

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु।
विशिखो व्युपवीतश्च यत् करोति न तत् कृतम्॥

श्रुतिः,—

यज्ञोपवीतीत्येवाधीयेताध्यापयेद् याजयेद् यजेच्च।

मनुः,— कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत्।
त्रिवृता ग्रन्थिनैकेन तस्यैकोग्रन्थिरिष्यते॥

कात्यायनः,—

ऊर्द्ध्वं तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्।
त्रिवृतं चोपवीतं स्यात्त्रिवृता ग्रन्थिना युतम्॥
पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम्।
यज्ञोपवीतं तद्ज्ञेयं नातिह्रस्वं नचोच्छ्रितम्।

वामावृत्तं त्रिगुणं कृत्वा, दक्षिणावृत्तं नवगुणं कुर्य्यात्, तदेव च त्रिरावृत्तं[1] चोपवीतं वामस्कन्धे धृतं नाभिपृष्ठवंशयोर्धृतं यथा कटिपर्य्यन्तं प्राप्नोति तावत्परिमाणं कार्य्यमित्यर्थः।

आपस्तम्बः, उपासने गुरूणां वृद्धानामतिथीनां होमे जप्ये कर्म्मणि भोजने आचमने[2] च यज्ञोपवीती स्यात्।

निगमपरिशिष्टे, वामस्कन्धे यज्ञोपवीतं दैवे प्राचीनावीतीति इतरथा पितृयज्ञे नाभ्यादिकण्ठावसक्तमभिचारे निवीतं आपृष्ठदेशावलम्बं ग्राम्यधर्म्मेषु। कण्ठपदं लक्षणया स्कन्धपरं, द्विस्कन्धावसक्त इत्यर्थः। ग्राम्यधर्म्मो मैथुनम्।

गोभिलः दक्षिणबाहुमुद्धृत्य सव्येंऽशे प्रतिष्ठापयति, दक्षिणं कक्षमवलम्बं भवति, एवं यज्ञोपवीती भवति सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽशे प्रतिष्ठापयति सव्यं कक्षमवलम्बं भवति। एवं प्राचीनावीती भवति।

---

(१) त्रिवरम्। (२) स्वाध्याये।

मनुः—

निवीती कण्ठसज्जने।

ब्रह्माण्डे,—

यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्म्मणि।
तृतीयमुत्तरीयार्थेऽप्यभावे[1] परिकल्पयेत्॥
उपाकर्म्मणि जन्मर्क्षे च्छिन्ने चैव विशेषतः।
गुणच्छेदे विवाहे च नूतनत्वं प्रकल्पयेत्॥
नोपवीतं शिरः कुर्य्यान्न च नाभौ प्रधारयेत्।
अपसव्यं न कुर्वीत न हि कायाद्बहिर्नयेत्॥
मलापकर्षणे तैले मैथुने पितृकर्म्मणि।
अत्र कुर्य्याद्बहिर्नेयं नान्यत्रेत्यब्रवीन्मुनिः॥

नवयज्ञोपवीतधारणे ब्रह्मोपनिषदुक्तमन्त्रः,—

यज्ञोपवीतं परमं पवित्रं बृहस्पते यत्सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥

अयं मन्त्रस्तु पृथगुत्तरीयार्थतृतीययज्ञोपवीतग्रहणेऽपीति उत्तरीय-वस्त्रधारणप्रस्तावे उक्तं, तस्य उत्तरीयार्थत्वेन भिन्नं आचमनं कार्य्यम्।

मनुः,—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥

---

(१) वस्त्राभावे तद्विष्यते।

तस्मात्यक्तस्य पुरातनस्य जले निक्षेपः कार्य्यः। तथा, मेखलादण्डाजिनाद्यवघाते त्यक्त्वा हुत्वा यथार्थमुपेयात्। अवघातः पादमार्गेण निःसरणं, तयो च ऋटकत्रयं तुभ्यन्तामङ्गिरः।

पुनर्म्मनुः,—

अग्ने व्रतपत इति ऋटकत्रयम्[1]। इति यज्ञोपवीतविधिः।

(१) अग्ने व्रतया इति ऋटकत्रयम्।

## अथ तिलकधारणम्।

स्नातश्च तिलकं कृत्वं नित्यं कुर्य्याद्विशांपते।
प्रियङ्गुचन्दनाभ्यां वा विल्वेन तगरेण वा॥

तथा,— अशुचिर्वाप्यनाचारः पापं वा यदि चिन्तयेत्।
शुचिरेव भवेन्नित्यमूर्द्ध्वपुण्ड्राङ्कितो नरः॥

तथा च शौचसम्पादकत्वेन सर्व्वकर्म्माङ्गफलवत्त्वात्पुरुषार्थम्।
यच्छरीरं मनुष्याणामूर्द्ध्वपुण्ड्रविवर्जितम्।
द्रष्टव्यं नैव यत्किञ्चित् श्मशानसदृशं हि तत्॥
ऊर्द्ध्वपुण्ड्राङ्कितो नित्यं ब्रह्मलोके महीयते।

सामान्यतस्तु, उत्तमोमध्यमोहीनश्चतुस्त्रिद्व्यङ्गुलैः क्रमात्।
वर्त्तिदीपाकृतिः कार्य्या वेणुपत्राकृतिस्तथा।
पद्मस्य मुकुलाकारं कुमुदस्योत्पलस्य च॥

अथवा,

ललाटे दण्डवत् कुर्य्यात् हृदये कमलाकृतिम्।
वेणुपत्राकृतिं बाह्वोः कुर्य्यादन्यत्र दीपवत्॥

इत्याकाराणि।

तथा,— गङ्गामृत्तिकया चैव स्नात्वा कुर्य्याल्ललामकम्।
चन्दनेन मृदा वापि कुर्य्यात्पश्चाल्ललामकम्॥
ललाटकण्ठहृद्बाह्वोः सर्व्वकल्मषनाशनम्।
ललाटे वासुदेवाख्यं कण्ठे विष्णुमथाव्ययम्॥
प्रद्युम्नं चानिरुद्धं च बाह्वोर्हृदि तथाच्युतम्॥

पाद्मे— ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियाणां तथैव च ।
वैश्यादीनां तथा विप्रः शूद्रादेर्मण्डलाकृति ॥

महाभारते,—
जाह्नवीतीरसम्भूतां मृदं मूर्द्ध्नि बिभर्त्ति यः ।
बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥

विष्णुधर्म्मे,—
तुलसीकाष्ठसम्भूतचन्दनेन विलेपनम् ।

तथा,— चन्दनं धूपशेषञ्च सर्व्वपापापहारकम् ।

तद्धूपोपयुक्ताग्निभस्म तदर्थम् । एतदपि तिलकरूपत्वेऽप्यविरोधात्तिलकार्थे ग्राह्यम् ।

स्कान्दे,—
योधारयेद्द्वारवतीसमुद्भवां सदा पवित्रां कलिकल्मषापहाम् ।
नित्यं ललाटे हरिमन्त्रसंयुतां यमं न पश्येद्यदि पापसंवृतः ॥
ग्रहा न हिंसन्ति न रक्षसां गणा यक्षाः पिशाचोरगभूतदानवाः ।
यस्यान्तकाले खग गोपीचन्दनं बाह्वोर्ललाटे हृदि मस्तके च ॥
प्रयाति लोकं कमलालयाप्रभोः स बालघाती यदि ब्रह्महा नरः ।
योमृत्तिकां द्वारवतीसमुद्भवां करे समादाय ललाटपट्टके ॥
करोति नित्यं त्वथशुद्धिहेतोः क्रियाफलं कोटिगुणं लभेत सः ।
क्रियाविहीनं यदि मन्त्रवर्जितं श्रद्धाविहीनं यदि भक्तिवर्जितम् ॥
कृत्वा ललाटे यदि गोपीचन्दनं करोति तत्कर्म्म सदाक्षयं बुधाः ।
सत्यतपाः, गोमतीतीरसम्भूतां गोपीदेहसमुद्भवाम् ॥
मृदं मूर्द्ध्नि वहेद्यस्तु सर्व्वपापैः प्रमुच्यते ।

तुलसीप्रक्रमे,—

तन्मृदाचरितं पुण्ड्रं ललाटे सर्व्वसिद्धिदम् ॥

मुमुक्षुस्तु सदा कुर्य्यात्प्रदेशिन्या यथाक्रमम् ।

सर्व्वान् कामानभिलषन् सदानामिकया बुधः ॥

इति वाक्यदर्शनात्प्रदेशिन्या अनामिकया वा ग्राह्यम्। यदि आसां मृत्तिकानां सौकर्य्यार्थं एकीकरणेन तिलकधारणं तदा न कश्चिद्विरोधः।

पादाकृतिं हरेः पुण्ड्रं धारयेच्छिद्रसंयुतम् ।

स याति वैष्णवं स्थानं यत्नैरपि सुदुर्लभम् ॥

नासिकामूलमारभ्य केशान्तं धारयेद्बुधः ।

मध्ये छिद्रं तत्र कृत्वा वैष्णवो विष्णुलोकभाक् ॥

इदं तु वैष्णवेन कार्य्यं गोदोहनवत् फलार्थम्। दीपशिखाद्याकारस्तु चमसवन्नित्यः। तत्र ललाटे सच्छिद्रपादाकारोऽन्यत्र दीपशिखाद्याकार एवमेव समाचारः। सामर्थ्ये तु,

ललाटे केशवं विद्यान्नारायणमथोदरे ।

माधवं हृदये चैव गोविन्दं कण्ठकूपके ॥

उदरे दक्षिणे पार्श्वे विष्णवे नम उच्यते ।

तत्पार्श्वे बाहुमूले तु स्मरेद्‌ मधुसूदनम् ॥

त्रिविक्रमं कर्णपार्श्वे वामे कुक्षौ तु वामनम् ।

श्रीधरं बाहुके वामे हृषीकेशं तु कण्ठके ॥

पृष्ठतः पद्मनाभं तु दामोदरं ककुद्यपि ।

लक्ष्मीं वक्षःस्थले देवीं वासुदेवं च मूर्द्धनि ॥

नामानि द्वादशैतानि नमस्कारयुतानि च ।
प्रयुञ्जीत हरिं ध्यात्वा वासुदेवेति मूर्द्धनि ॥

इत्येवं विहितस्थानमन्त्राणि। अत्यन्ताशक्तौ,—

ललाटे वासुदेवाख्यं कण्ठे श्रीपुरुषोत्तमम् ।
नाभौ नारायणं स्मृत्वा सर्व्वपापैः प्रमुच्यते ॥

एवं,— नारायणायुधैर्युक्तं कृत्वात्मानं कलौ युगे ।
कुरुते पुण्यकर्माणि मेरुतुल्यानि तानि तु ॥
चक्राङ्किततनुर्भूत्वा यः श्राद्धं कुरुते नरः ।
तत्सर्वं प्रतिगृह्णाति गयायां च गदाधरः ॥

इति सर्व्वकर्म्मानुष्ठाने फलातिशयार्थं शङ्खचक्रादिधारणं अङ्गभूतं, वचनान्तरात् पुरुषार्थं च । तथाच स्मृतिः,—

नारायणायुधैर्नित्यं भूषितो यस्य विग्रहः ।
पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः ॥

यत्तु निषेधवचनं पठति,—

एककजातेरयं धर्म्मो न द्विजातेः कथञ्चन ।

इति तत्र एकजातेः शूद्रस्यायं धर्म्मश्चक्रादिधारणमित्यर्थः ।

द्विजातिपदमत्र क्षत्रवैश्यपरं, तथा च न क्षत्रवैश्ययोश्चक्रादिचिह्नधारणं, ब्राह्मणानां तु तद्धारणस्य विहितत्वात् । तथाच,

उपवीतादिवद्धार्य्याः शङ्खचक्रादयः सदा ।
ब्राह्मणस्य विशेषेण वैष्णवस्य च तद्भवेत् ॥
चक्राङ्किततनुर्विप्रो भुंक्ते यस्य च वेश्मनि । इति ।

तल्लेखनं च--

विलिखेद्देवचिह्नानि तुलसीगोपिकामृदा।

इति वचनात् तुलसीमृत्तिकया गोपीचन्दनेन वा।

कृत्वा काष्ठमयान् बिम्बान् कृष्णचिह्नैश्च चिह्नितम्।

यश्चाङ्कयति चात्मानं तत्समो नास्ति वैष्णवः॥

यच्च,--

शङ्खं चक्रञ्च यः कुर्य्यान्मृदा कार्ष्णायसेन च।

स शूद्रवद्बहिः कार्य्यः सर्व्वस्मात् द्विजकर्म्मणः॥

अत्र कार्ष्णायससाहचर्य्यान्मृत्पदं बिम्बपरं, तेन कृत्वा काष्ठमयं बिम्बमिति विहितकाष्ठमयबिम्बाभावे प्रतिनिधित्वेन प्राप्तयोः मृन्मयलोहबिम्बयोर्निषेधः। तेन ताम्रादीनां प्रतिनिधित्वेन करणे न दोषः।

दक्षिणे तु करे विष्णोर्विभृयाद्वै सुदर्शनम्।

सव्ये शंखन्तु विभृयादेवं ब्रह्मविदो विदुः॥

शङ्खोपरि कृते पद्मे प्रत्यक्षं दक्षिणे करे॥

वामे गदाधरश्चक्रे वासुदेवः स्वयम्भवेत्॥

इति वचनादुभयत उभयं धार्य्यं, न च विकल्पः, एकार्थश्रानात्।

सर्व्वाङ्गं चिह्नितं यस्य नारायणकरायुधैः।

वैष्णवत्वं कृतं तस्य पापं न प्रविशेद्धृदि॥

इति सर्व्वाङ्गेऽपि धारणम्। तत्र मन्त्रः,

पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय।

त्राहि मां पापिनं घोरं संसारार्णवपातनम्॥

सुदर्शन निजज्योतिर्ध्वस्तपातकसञ्चय ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥
संसारभयभीतानां योगिनामभयङ्करः ।
*पद्महस्तेन यो देवो योगीशस्तं नमाम्यहम् ॥*
ब्रह्माण्डभुवनारम्भमूलस्तम्भगदाधर ।
कौमोदकी करे यस्य तं नमामि गदाधरम् ॥

अथ कृष्णमुद्रा,—

कृष्णनामाङ्किता मुद्रा अष्टाक्षरसमन्विता ।
शंखाद्यैरायुधैर्युक्ता स्वर्णरौप्यमयी तथा ॥
यस्य पुंसः करे नित्यं तत्समो नास्ति वैष्णवः ।
कृष्णमुद्राप्रयुक्तश्च करोति पितृदैवतम् ॥
नित्यं नैमित्तिकं काम्यं कृतं[1] भवति चाक्षयम् ।
दर्पणे मुखमालोक्य कुर्य्यात्तिलकधारणम् ॥

सर्व्वथा उदके न पश्येत्, तत्र प्रायश्चित्तस्योक्तत्वात्। इति तिलकधारणम् ॥

---

(१) सर्व्वम् ।

## अथ मालाधारणम् ।

रुद्राक्षं धारयेन्नित्यं सन्ध्यादिषु च कर्म्मसु ।
अरुद्राक्षधरो भूत्वा यद्‌यत्कर्म्म च वैदिकम् ॥
करोति जपहोमादि तत्सर्व्वं निष्फलं भवेत् ।

इति । सर्व्वकर्म्मसु एतद्धारणं नित्यम् ।

शिष्टाः—

पुण्यानां परमं पुण्यं पवित्रं पापनाशनम् ।
रुद्राक्षधारणं श्रेष्ठमिहलोके परत्र च ॥
मूर्खो वाऽप्यन्त्यजातो वा युक्तो वा सर्वपातकैः ।
रुद्राक्षं धारयेद्‌यस्तु स रुद्रो नात्र संशयः ॥

इति फलश्रुतेः संयोगपृथक्त्वन्यायेन काम्यं च ।

### धारणस्थानम् ।

हस्ते वाह्नौ तथा कर्णे रुद्राक्षं मूर्द्ध्नि धारयेत् ।
अवध्यः सर्व्वभूतानां रुद्रवद्विचरेद् भुवि ॥
सर्व्वपापविनिर्मुक्तः स गच्छति परां गतिम् ।
यज्ञोपवीतस्थानं च विप्राणां धारणं हितम् ॥
दशकोटिगुणं पुण्यं धारणाल्लभते जपे ।

अत्र विप्राणां यज्ञोपवीतस्थाने धारणं जपाश्रयं, चतुर्दशकोटिगुणफलरूपकाम्यफलार्थम् । तेन पुरुषार्थधारणे[1] जपेऽप्युक्तकामनां विना धारणं न यज्ञोपवीतस्थाननियमः ।

---

(१) कर्म्मान्तराङ्गधारणे ।

अत्र विशेषः,—

यावत् षोड़शवक्त्रान्तमेकवक्त्रादितः स्थिताः ।
दुर्ल्लभस्त्वेकवक्त्रस्तु तथैकादश षोड़श ॥
त्रिचतुःपञ्चमुखाः सुलभाः शेषाश्च मध्यमाः ।
एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति ॥
भक्तारम्भनकाले तु स्थाल्यूर्द्धं स्थाप्यते यदि ।
अग्निस्तम्भस्तदा नूनमेकवक्त्रस्य लक्षणम् ॥
स्रोतसि प्रतिस्रोतश्च स च याति मुहुर्मुहुः ।
स च यावच्छरीरस्थस्तावन्मृत्युर्न वाधते ॥
द्विवक्त्रो गोवधं हन्यात्त्रिवक्त्रः स्त्रीवधं तथा ।
चतुर्वक्त्रो नरवधं मोचयेन्नात्र संशयः ॥
अगम्यागमनञ्चैव अभक्ष्यस्य च भक्षणम् ।
मुच्यते सर्व्वपापेभ्यः पञ्चवक्त्रस्य धारणात् ॥
षड्वक्त्रं कार्त्तिकेयस्तु धारयेद्दक्षिणे भुजे ।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥
सप्तवक्त्रमैश्वर्य्यदं महापातकनाशनम् ।
जीवेद्वर्षशतं 'साग्रमष्टवक्त्रस्य धारणात् ॥'
नश्यन्ति सर्व्वपापानि न विघ्नः कुत्रचिद्भवेत् ।
नववक्त्रं वामबाहौ धारणं मुक्तिदं मतम् ।
लक्षकोटिसहस्रञ्च ब्रह्महत्यां करोति यः ॥

(१) साट ।

तत्सर्व्वं दहते शीघ्रं दशवक्त्रस्य धारणात्।
तथैकादशवक्त्रस्य शिखायामेव धारणात्॥
सर्व्वे दुष्टाश्च नश्यन्ति वाजिमेधसहस्रकम्।
तथा द्वादशवक्त्रस्य कण्ठदेशे च धारणात्॥
न चैवाग्निभयं तस्य न च व्याधिः प्रवर्त्तते।
गोमेधफलसौभाग्ये हिंसापापक्षयस्तथा॥
तत्त्रयोदशवक्त्रस्य कण्ठदेशे च धारणात्।
सर्व्वकर्म्मफलावाप्तिः सर्व्वपापक्षयस्तथा॥
वक्त्रं चतुर्द्दशं तस्य[1] पुण्येन प्राप्यते यदि।
धारयेत् सततं मूर्द्ध्नि सर्व्वपापप्रणाशनम्॥
अमन्त्रधारणादेषां गुणा एते प्रकीर्त्तिताः।
समन्त्रं धारयेद्यस्तु फलं वक्तुं न शक्यते॥

एवञ्चामन्त्रधारणेऽप्युक्तफलसिद्धिः। —

यत्तु, विना मन्त्रेण यो धत्ते स याति नरकं ध्रुवम्। इति तत्समन्त्रकविधिप्ररोचनार्थममन्त्रकनिन्दारूपमेव, उदितहोम-प्रशंसार्थमनुदितनिन्दा यथा।

प्रातः प्रातरनृतं ते वदन्ति पुरोदया जुह्वति येऽग्निहोत्रम्। इति। तदुक्तं न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपि तर्हि स्तुत्यं स्तोतुम्। अमन्त्रधारणेऽपि प्रतिष्ठा कार्य्या।

सा चैवं,—

---

(१) वक्त्र।

